निवारय । 'षिधु गत्याम्'। भौवादिकः । 'उपसर्गात् सुनोति' (पा० ८।३।६५) इत्यादिना षत्वम् । येन धनेनेत्यादि पूर्ववत् । हे देवाः युष्मत्प्रसादात् तन्मे मदीयं धनं भूयः बहुतरं भवतु । कनीयः अल्पतरं मा भवतु । भूय इति । बहुशब्दाद् ईयसुनि 'बहोर्लोपो भू च बहोः' (पा० ६।४।१५८) इति ईयस आदेर्लोपः बहोर्भूभावश्च । कनीय इति । 'युवाल्पयोः कनन्यतरस्याम्' (पा० ५।३।६४) इति अल्पशब्दस्य कन् आदेशः ।

सप्तमी । येनेति यत् प्रकृतं धनं तस्मिन् मे मदीये धने रुचिम् सर्वजनप्रीतिं धनप्रदानेन आदानेच्छाम् इन्द्र आ दधातु स्थापयतु । तथा प्रजापत्यादयश्च रुचिं कुर्वन्तु ।

मं०—उप त्वा नमसा वयं होतर्वैश्वानर स्तुमः । स नः प्रजास्वात्मसु गोषु प्राणेषु जागृहि ॥८॥

प०—उप । त्वा । नमसा । वयम् । होतः । वैश्वानर । स्तुमः । सः । नः । प्रऽजासु । आत्मऽसु । गोषु । प्राणेषु । जागृहि ॥८॥

अष्टमी । हे होतः देवानाम् आह्वातः वैश्वानर विश्वनरहित अग्ने त्वा त्वां वयं नमसा हविर्लक्षणेन अन्नेन सह उप स्तुमः उपेत्य स्तोत्रं कुर्मः । स स्तुतस्त्वं नः अस्माकं प्रजासु पुत्रपौत्रादिलक्षणासु आत्मसु अस्मासु गोषु अस्मदीयेषु पशुषु प्राणेषु जागृहि बुध्यस्व । प्रजादिषु दुःखलेशोऽपि यथा न प्राप्नोति तथा रक्षन् अवहितो वर्तस्वेत्यर्थः ।

मं०—विश्वाहा ते सदमिद्भरेमाश्वायेव तिष्ठते

जातवेदः। रायस्पोषेण समिषा मदन्तो

मा ते अग्ने प्रतिवेशा रिषाम ॥ ९ ॥

प०—विश्वाहा। ते। सदम्। इत्। भरेम। अश्वायऽइव। तिष्ठते।

जातऽवेदः। रायः। पोषेण। सम्। इषा। मदन्तः।

मा। ते। अग्ने। प्रतिऽवेशाः। रिषाम ॥९॥

नवमी। हे जातवेदः जातानां वेदितरग्ने तिष्ठते स्वगृहे नित्यं वर्तमानाय ते तुभ्यं विश्वाहा सर्वाण्यहानि।'०अत्यन्तसंयोगे' (पा०२।३।५) द्वितीया। सदमित् सदैव भरेम हरेम। हविरिति शेषः। तत्र दृष्टान्तः। अश्वायेव। स्वगृहे वर्तमानाय अश्वाय काले काले यथा घासः प्रदीयते तद्वत्। हे अग्ने ते तव प्रतिवेशाः परिचरणादिना प्रत्यासन्ना वयं रायः धनस्य पोषेण समृद्ध्या इषा इष्यमाणेन अन्नेन च सं मदन्तः संमाद्यन्तो हृष्यन्तः। व्यत्ययेन शप्। मा रिषाम विनष्टा मा भूम। 'रुष रिष हिंसायाम्'। पुषादित्वात् च्लेरङादेशः।

# संग्रहे षोडशं सूक्तम् ।

## ( तृतीय काण्डे त्रिंशत्तमं सूक्तम् )

'सहृदयं सांमनुष्यम्' इति सूक्तेन सांमनस्यकर्मणि ग्राममध्ये सम्पातितोदकुम्भनिनयनम् तद्वत् सुराकुम्भनिनयनम् त्रिवर्षवत्सिकाया गोः पिशितानां प्राशनम् सम्पातितान्नप्राशनम् सम्पातितसुरायाः पायनं तथाविधप्रपोदकपायनं च कुर्य्यात्। सूत्रितं हि । 'सहृदयम् [३।३०] तद् षु ते [५।१।५] सं जानीध्वम्' [६।६४] इति प्रक्रम्य 'सांमनस्यान्युदकुलिजं सम्पातवन्तं ग्रामं परिहृत्य मध्ये निनयति' इत्यादि [कौ० २।३]।

तथा उपाकर्मण्यपि आज्यहोमे अस्य सूक्तस्य विनियोगः । सूत्रितं हि । 'अभिजिति शिष्यान् उपनीय श्वोभूते सम्भारान् सम्भरति' इति प्रक्रम्य 'गणकर्मभिर्विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्यं जुहुयात्' इति [कौ० १४।३]। अत्र गणकर्मशब्देन 'सहृदयम्' 'तद् षु ते' इत्यादिगणो विवक्षितः ।

तत्र प्रथमा—

मं०—सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥१॥

प०—सऽहृदयम् । साम्ऽमनस्यम् । अविऽद्वेषम् । कृणोमि । वः ।
अन्यः । अन्यम् । अभि । हर्यत । वत्सम् । जातम्ऽइव ।
अघ्न्या ॥१॥

भा०—हे विवदमाना जनाः वः युष्माकम् अविद्वेषम् विद्वेषाभावोपलक्षितं सांमनस्यं कर्म कृणोमि करोमि। कीदृशं तत् साम्मनस्यम्। सहृदयम् समानैर्हृदयैरुपेतम्। समानचित्तवृत्तियुक्तम् इत्यर्थः। साम्मनुष्यम्। मिथः सम्प्रीतियुक्ता मनुष्याः सम्मनुष्याः तैर्निर्वर्तितं साम्मनुष्यम्। ईदृशं समानज्ञानहेतुभूतं सख्यं करोमि इत्यर्थः। ततो यूयमपि जातं वत्सम् अघ्न्याः। गोनामैतत्। अहन्तव्याः गाव इव अन्योन्यं परस्परम्। अभि हर्यत आभिमुख्येन कामयध्वम्। 'हर्य गतिकान्त्योः'।

द्वितीया—

मं०—अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः। जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ॥ २ ॥

प०—अनुऽव्रतः। पितुः। पुत्रः। मात्रा। भवतु। सम्ऽमनाः। जाया। पत्ये। मधुऽमतीम्। वाचम्। वदतु। शन्तिऽवाम् ॥२॥

भा०—पुत्रः तनयः पितुरनुव्रतः। व्रतम् इति कर्म नाम। अनुकूलकर्मा भवतु। यत् पिता कामयते तत्कर्मकारी भवतु। माता च सम्मनाः पुत्रादिभिः समानमनस्का भवतु। पत्ये भर्त्रे जाया भार्या मधुमतीम् माधुर्यवतीं शन्तिवाम् सुखयुक्तां वाचं वदतु ब्रवीतु। समानमनस्का भवतु इत्यर्थः। पत्ये। 'पतिः समास एव' (पा० १।४।८) इति घिसंज्ञायाः नियमात् केवलस्य अभावात् तत्कार्याभावे यण्। शन्तिवाम् इति। 'कंशंभ्याम्' (पा० ५।२।१३८) इति शंशब्दात् तिप्रत्ययः। ततो मत्वर्थीयो वः।

तृतीया—

मं०—मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा। सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ ३ ॥

प०—मा। भ्राता। भ्रातरम्। द्विक्षत्। मा। स्वसारम्। उत। स्वसा। सम्यञ्चः। सऽव्रताः। भूत्वा। वाचम्। वदत। भद्रया ॥ ३

भा०—भ्राता सोदरः भ्रातरं मा द्विष्यात् दायभागादिनिमित्तेन भ्रातृविषयम् अप्रियं मा कुर्यात्। उत अपि च स्वसारम् भगिनीं स्वसा मा द्विष्यात्। 'ऋन्नेभ्यः' (पा० ४। १। ५) इति प्राप्तस्य ङीपः 'न षट्स्वस्रादिभ्यः' (पा० ४। १। १०) इति प्रतिषेधः। ते सर्वे भ्रात्रादयः सम्यञ्चः समञ्चनाः समानगतयः सव्रताः समानकर्मणो भूत्वा भद्रया कल्याण्या वाचा वागिन्द्रियेण वाचं वदतु वदन्तु। व्यत्ययेन एकवचनम्। सम्यञ्च इति। संपूर्वाद् अञ्चतेः 'ऋत्विग्' (पा० ३। २। ५९) इत्यादिना क्विन्। 'समः समि' (पा० ६। ३। ९३) इति सम्यादेशः।

चतुर्थी—

मं०—येन देवा न वियन्ति नो च विद्विषते मिथः। तत् कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ॥ ४ ॥

प०—येन॑ । दे॒वाः । न । वि॒ऽयन्ति॑ । नो इति॑ । च । वि॒ऽद्विष॑ते ।

मि॒थः । तत् । कृ॒ण्मः॒ । ब्रह्म॑ । वः॒ । गृ॒हे । स॒म्ऽज्ञान॑म् ।

पुरु॑षेभ्यः ॥ ४ ॥

भा०—येन ब्रह्मणा देवा इन्द्रादयः न वियन्ति विमतिं न प्राप्नुवन्ति । नो च नैव च मिथः परस्परं विद्विषते विद्वेषं न कुर्वते । 'द्विष अप्रीतौ' । अदादित्वात् शपो लुक् । तत् संज्ञानम् समानज्ञान-निमित्तम् ऐकमत्यापादकं ब्रह्म मन्त्रात्मकं साम्मनस्यं वः युष्माकं गृहे पुरुषेभ्यः । तादर्थ्ये चतुर्थी । तदर्थं कृण्मः कुर्मः । 'कृवि हिंसाकरण-योश्च' । 'धिन्विकृण्व्योर च' ( पा० ३ । १ । ८० ) इति उप्रत्ययः । 'लोपश्चास्यान्यतरस्यां म्वोः' ( पा० ६ । ४ । १०७ ) इति उकारलोपः ।

पञ्चमी—

मं०—ज्याय॑स्वन्तश्चि॒त्तिनो॒ मा वि यौ॑ष्ट सं॒राध॑-

यन्तः॒ सधु॑रा॒श्चर॑न्तः । अ॒न्यो अ॒न्यस्मै॑

व॒ल्गु वद॑न्त॒ एत॑ स॒ध्रीची॑नान् व॒ः संम॑न-

सस्कृणोमि ॥ ५ ॥

प०—ज्याय॑स्वन्तः । चि॒त्तिनः॑ । मा । वि । यौ॒ष्ट॒ । स॒म्ऽराध॑-

यन्तः । स॒ऽधु॑राः । चर॑न्तः । अ॒न्यः । अ॒न्यस्मै॑ ।

व॒ल्गु । वद॑न्तः । आ । इ॒त॒ । स॒ध्रीची॑नान् । वः॒ । स॒म्

ऽम॑नसः । कृ॒णो॒मि॒ ॥ ५ ॥

भा०—ज्यायस्वन्तः ज्यायस्त्वगुणोपेताः। ज्येष्ठकनिष्ठभावेन परस्परम् अनुसरन्त इत्यर्थः। चित्तिनः समानचित्तयुक्ताः संराधयन्तः समानसंसिद्धिकाः। समानकार्या इत्यर्थः। सधुराः समानकार्योद्वहनाः। 'ऋक्पूरब्धूःपथाम्' (पा० ५।४।७४) इति अकारः समासान्तः। इत्थं चरन्तः वर्तमाना यूयं मा वि यौष्ट मा पृथग् भूत। वियुक्ता मा भवतेत्यर्थः।'यु मिश्रणामिश्रणयोः'इत्यस्मात् माङि लुङि मध्यमबहुवचने रूपम्। इडभावश्छान्दसः। अन्योऽन्यस्मै परस्परं वल्गु शोभनं प्रियवाक्यं वदन्तः भाषमाणा यूयम् एत आगच्छत। अहमपि हे जनाः वः युष्मान् सध्रीचीनान् सहाञ्चतः कार्येषु सह प्रवृत्तान् संमनसः समानमनस्कान् कृणोमि करोमि। सध्रीचीनान् इति। सह अञ्चन्तीति विगृह्य अञ्चतेः 'ऋत्विग्' (पा० ३।२।५९) इत्यादिना किन्। 'सहस्य सध्रिः'(पा० ६।३।९५) इति सध्र्यादेशः। 'विभाषाञ्चेरदिक्स्त्रियाम्' (पा० ५।४।८) इति स्वार्थिकः खः। ततो भसंज्ञायाम् 'अचः' (पा० ६।४।१३८) इति अकारलोपे 'चौ' (पा० ६।३।१३८) इति दीर्घत्वम्।

षष्ठी—

म०—समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि। सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥६॥

प०—समानी। प्रऽपा। सह। वः। अन्नऽभागः। समाने। योक्त्रे। सह। वः। युनज्मि। सम्यञ्चः। अग्निम्। सपर्यत। अराः। नाभिम्ऽइव। अभितः ॥६॥

भा०—हे साम्मनस्यकामाः वः युष्माकं समानी एका प्रपा पानीयशाला भवतु। अन्नभागश्च सहैव भवतु। परस्परानुरागवशेन एकत्रावस्थितम् अन्नपानादिकं युष्माभिरुपभुज्यताम् इत्यर्थः। तदर्थम् अहं वः युष्मान् समाने योक्त्रे एकस्मिन् बन्धने स्नेहपाशे सह युनज्मि सह बध्नामि। अपि च सम्यश्चः संगताः एकफलार्थिनो भूत्वा समानज्ञानाः सन्तः अग्निं सपर्यत पूजयत। 'सपर पूजायाम्'। कण्ड्वादित्वाद् यक्। कथमिव स्थिता इति तत्राह। अरा नाभिमिव अभितः। रथचक्रस्य मध्यच्छिद्रं नाभिः। तस्या अभितो वर्तमाना अराः चक्रावयवाः कीलका नियतस्थानाः परिवेष्ट्य वर्तन्ते। एवम् एकम् अग्निम् अभितो वर्तमानाः परिचरतेत्यर्थः। 'अभितः परितः समया' (पा० १।४।४८) इति स्मरणात् तद्योगाद् नाभिम् इति द्वितीया।

सप्तमी—

म०—सध्रीचीनान् वः संमनसस्कृणोम्येकश्नुष्टीन्त्संवननेन सर्वान्। देवा इवामृतं रक्षमाणाः सायंप्रातः सौमनसो वो अस्तु ॥७॥

प०—सध्रीचीनान्। वः। सम्ऽमनसः। कृणोमि। एकऽश्नुष्टीन्। सम्ऽवननेन। सर्वान्। देवाःऽइव। अमृतम्। रक्षमाणाः। सायम्ऽप्रातः। सौमनसः। वः। अस्तु ॥७॥

भा०—सध्रीचीनान् सह प्रवर्तमानान् एककार्यकरणे सहोद्युक्तान् सम्मनसः समानमनस्कान् वः युष्मान् कृणोमि करोमि। तथा

युष्माकम् एकश्नुष्टिम् एकविधं व्यापनम् एकविधस्यान्नस्य भुक्तिं वा करोमि। संवननेन वशीकरणेन अनेन साम्मनस्यकर्मणा युष्मान् सर्वान्। वशीकरोमीत्यर्थः। अमृतं द्युलोकस्थम् अजरामरत्वप्रापकं पीयूषं रक्षमाणाः ऐकमत्येन पालयन्तः देवा (इव) इन्द्रादयो यथा सौमनस्ययुक्ता भवन्ति एवं वः युष्माकं सायंप्रातः एतदुपलक्षिते सर्वस्मिन् काले सौमनसः सौमनस्यं शोभनमनस्कत्वम् (अस्तु) भवतु।



# संग्रहे सप्तदशं सूक्तम् ।

## ( अथ चतुर्थे काण्डे षोडशं सूक्तम् )

चतुर्थेऽनुवाके पञ्च सूक्तानि । तत्र 'बृहन्नेषाम' इति आद्येन सूक्तेन अभिचारकर्माणि शत्रुं क्रोशन्तम् अनुब्रूयात् ( कौ० ६ । २ )। धूमकेतूपातशान्तौ वारुणपशुप्रयोगे 'उतेयं भूमिः' ( ३ ) इत्येषा ( कौ० १३ । ३५ )।

तत्र प्रथमा—

मं०—बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति ।
यस्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः ॥१॥

प०—बृहन् । एषाम् । अधिऽस्थाता । अन्तिकात्ऽइव । पश्यति । यः । तायत् । मन्यते । चरन् । सर्वम् । देवाः । इदम् । विदुः ।

भा०—बृहन् महान् परिवृढो वा वरुणः एषाम् दुरात्मनां शत्रूणाम् अधिष्ठाता नियन्ता सन् तैः कृतं सर्वम् अन्याय्यम् अन्तिकादिव पश्यति समीपदेशादिव जानाति । न तस्य व्यवधायकं किंचिद् अस्तीत्यर्थः । यो वरुणः तायत् सान्तत्येन वर्तमानं स्थिर-वस्तु चरत् चरणशीलं नश्वरं च वस्तु मन्यते । स्थावरजङ्गमात्मकं सर्वं जगज्जानातीत्यर्थः । स बृहन् इति सम्बन्धः । तायत् इति । 'तायृ सन्तानपालनयोः' । अस्मात् लटः शत्रादेशः । इत्थंविधज्ञानसद्भावं वरुणस्य उपपादयति सर्वम् इति । व्यवहितं विप्रकृष्टं स्थिरं नश्वरं स्थूलं सूक्ष्मं इति एतादृग् इदं सर्वम् अतिरोहितज्ञानत्वाद् देवाः विदुः

जानन्ति। 'विद ज्ञाने' । 'विदो लटो वा' (पा० ३।४।८३) इति झेः उस् आदेशः।

द्वितीया—

मं०—यस्तिष्ठति चरति यश्च वञ्चति यो निलायं
चरति यः प्रतङ्कम् । द्वौ संनिषद्य यन्म-
न्त्रयेते राजा तद् वेद वरुणस्तृतीयः॥२॥

प०—यः। तिष्ठति। चरति। यः। च। वञ्चति। यः। निऽलायन्।
चरति। यः। प्रऽतङ्कम्। द्वौ। सम्ऽनिषद्य। यत्।
मन्त्रयेते इति। राजा। तत्। वेद। वरुणः। तृतीयः॥२॥

भा०—पूर्वस्याम् ऋचि एषाम् इत्युक्तम्। तत्र इदमा के पुनः प्रतिनिर्दिश्यन्त इति तान् निर्दिशति यस्तिष्ठतीति पूर्वार्धेन। यः शत्रुस्तिष्ठति अभिमुखम् अवतिष्ठते यश्चरति गच्छति यश्च वञ्चति कौटिल्येन प्रतारयति यः शत्रुः निलायम् निलयनेन अनिर्गमनेन चरति। यद्वा निलीनः अदृश्यः सन् चरति। अयतेर्निस्पूर्वात् णमुल्। नि-पूर्वात् लीयतेर्वा। उभयथापि समानोऽर्थः। 'उपसर्गस्यायतौ' (पा० ८।२।१९) इति लत्वम्। यः शत्रुः प्रतङ्कम् प्रकर्षेण कृच्छ्रजीवनं प्राप्य चरति वर्तते। 'तकि कृच्छ्रजीवने'। अस्मात् प्रपूर्वात् णमुल्। एषां शत्रूणाम् इति पूर्वेण सम्बन्धः। अन्तिकादिव पश्यतीति यद् उक्तं तदपि समर्थयते द्वौ संनिषद्येत्युत्तरार्द्धेन। द्वौ पुरुषौ रहसि संनिषद्य उपविश्य यत् कार्यं मन्त्रयेते गुप्तं भाषेते। 'मत्रि गुप्तभाषणे' इति धातुः। तयोर्गुप्तं भाषमाणयोः तृतीयः त्रित्व-संख्यापूरकः सन् राजा ईश्वरो वरुणः स्वसार्वज्ञ्येन तत् सर्वं वेद

जानातीत्यर्थः। ततश्च अकार्यचिन्तावसर एव तान् निग्रहीतुं वरुणः शक्नोतीत्यर्थः। 'त्रेः सम्प्रसारणं च' (पा० ५।२।५५) इति पूरणार्थे तीयप्रत्ययः सम्प्रसारणं च।

तृतीया—

मं०—उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरेअन्ता। उतो समुद्रौ वरुणस्य कुक्षी उतास्मिन्नल्प उदके निलीनः ॥३॥

प०—उत। इयम्। भूमिः। वरुणस्य। राज्ञः। उत। असौ। द्यौः। बृहती। दूरेऽअन्ता। उतो इति। समुद्रौ। वरुणस्य। कुक्षी इति। उत। अस्मिन्। अल्पे। उदके। निऽलीनः ॥३॥

भा०—उतशब्दः अप्यर्थे। इयं सर्वाधिष्ठानत्वेन निहिता भूमिरपि राज्ञः ईश्वरस्य दुष्टनिग्रहे अधिकृतस्य वरुणस्य वशे वर्तते। उत अपि च असौ विप्रकृष्टा बृहती महती दूरेअन्ता दूरे विप्रकृष्टे देशे अन्ते अन्तिके च भवतीति दूरेअन्ता। यत एवं व्याप्य वर्तते अतो बृहतीति भावः। एवंरूपा द्यौश्च वरुणस्य राज्ञो वशे वर्तते। बृहती दूरेअन्तेति विशेषणद्वयं भूम्या अपि योज्यम्। अत एव दूरे-अन्ते इति द्यावापृथिव्योर्नामसु पठितम् [निघ० ३। ३०]। उतो अपि च समुद्रौ पूर्वपश्चिमौ वरुणस्य राज्ञः कुक्षी दक्षिणोत्तरपार्श्वभेदेन अवस्थिते द्वे उदरे। एवं भूम्यादिकं कृत्स्नं जगद् व्याप्य वर्तमानोऽपि अस्मिन् अल्पेऽपि उदके तटाकह्रदादिगते निलीनः अन्तर्हितो भवति।

चतुर्थी—

मं०—उत यो द्यामतिसर्पात् परस्तान्न स मुच्यातै

वरुणस्य राज्ञः । दिव स्पशः प्र चरन्तीदमस्य सहस्राक्षा अति पश्यन्ति भूमिम् ॥४॥

प०—उत । यः । द्याम् । अतिऽसर्पात् । परस्तात् । न । सः । मुच्यातै । वरुणस्य । राज्ञः । दिवः । स्पशः । प्र । चरन्ति । इदम् । अस्य । सहस्रऽअक्षाः । अति । पश्यन्ति । भूमिम् ॥४॥

भा०—उत अपि च यः शत्रुः अनर्थकारी अस्माकं पुरस्तात् द्याम् अन्तरिक्षप्रदेशम् अतिसर्पात् अतिक्रम्य सर्पेद् गच्छेत् । यद्वा सुकृतप्राप्यं द्यां स्वर्गम् अतिक्रम्य अपथे प्रवर्तेतेत्यर्थः । स शत्रुः वरुणस्य राज्ञः पाशेभ्यो न मुच्यातै न मुच्येत । तैर्बद्ध एव वर्तताम् इत्यर्थः । मुचेः कर्मणि लेटि आडागमः । 'वैतोन्यत्र' (पा० ३ । ४ । ९६) इति ऐकारः । कथं द्युलोकस्थो वरुणः मनुष्यकृतम् अपराधं जानातीति तत्राह दिवः स्पश इति । दिवः द्युलोकान्निर्गताः अस्य वरुणस्य स्पशः चारा इदं पार्थिवं स्थानं प्र चरन्ति प्राप्य सञ्चरन्ति । ते च सहस्राक्षाः सहस्रसंख्याकैर्दर्शनोपायैर्युक्ताः सन्तः भूमिम् अति पश्यन्ति । भूलोकवृत्तान्तं सर्वम् अतिशयेन साक्षात्कुर्वन्ति इत्यर्थः ।

पञ्चमी—

मं०—सर्वं तद् राजा वरुणो वि चष्टे यदन्तरा रोदसी यत् परस्तात् । संख्याता अस्य निमिषो जनानामक्षानिव श्वघ्नी नि मिनोति तानि ॥५॥

प०—सर्वम् । तत् । राजा । वरुणः । वि । चष्टे । यत् । अन्तरा । रोदसी इति । यत् । परस्तात् । सम्ऽख्याताः । अस्य । निऽमिषः । जनानाम् । अक्षान्ऽइव । श्वऽघ्नी । नि । मिनोति । तानि ॥५॥

भा०—रोदसी अन्तरा द्यावापृथिव्योर्मध्ये यत् प्राणिजातं वर्तते तथा पुरस्तात् स्वस्य पुरोभागे यत्प्राणिजातम् अस्ति तत् सर्वं वरुणो राजा वि चष्टे विशेषेण पश्यति। तस्मात् तेषां जनानां प्राणिनां निमिषः निमेषणव्यापारस्य । उपलक्षणम् एतत् । अक्षिपरिस्पन्दोपलाक्षितस्य अस्य साध्वसाधुकर्मणः संख्याता परिमाणयिता वरुणः तानि पापिनां शिक्षाकर्माणि तत्तत्पापानुसारेण नि मिनोति निक्षिपति । 'डुमिञ् प्रक्षेपणे' । तत्र दृष्टान्तः । अक्षानिवेति । स्वघ्नी स्वम् आत्मानं स्वकीयं धनं च हन्तीति कितवः स्वघ्नी । तथा च यास्कः । श्वघ्नी कितवो भवति स्वं हन्ति [नि० ५ । २२] इति। यथा कितवः अक्षान् आत्मनो जयार्थं निक्षिपति तद्वद् इत्यर्थः ।

षष्ठी—

मं०—ये ते पाशा वरुण सप्तसप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः । छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु ॥६॥

प०—ये । ते । पाशाः । वरुण । सप्तऽसप्त । त्रेधा । तिष्ठन्ति । विऽसिताः । रुशन्तः । छिनन्तु । सर्वे । अनृतम् ।

वदन्तम् । यः । सत्यऽवादी । अति । तम् । सृजन्तु ॥६॥

भा०—हे वरुण ये त्वदीयाः पाशाः सप्तसप्त उत्तममध्यमाधमभेदेन प्रत्येकं सप्तसंख्याकाः त्रेधा त्रिप्रकारं विसिताः तत्रतत्र पापिनां निग्रहाय जालवद् बद्धाः । एतच्च त्रैविध्यम् 'उदुत्तमं वरुण' (ऋ० १।२४।१५) इति मन्त्रान्तराद् प्यवसितम् । रुषन्तः तत्तत्पापानुसारेण पापिष्ठान् हिंसन्तस्तिष्ठन्ति सर्वे ते पाशाः अनृतं वदन्तम् पापकृतम् अस्मदीयं शत्रुं छिनत्तु छिन्दन्तु । यस्तु सत्यवादी सत्यवदनशीलः पुण्यकृत् तम् अति सृजन्तु विमुञ्चन्तु ।

सप्तमी—

मं०—शतेन पाशैरभि धेहि वरुणैनं मा ते मोच्यनृतवाङ् नृचक्षः । आस्तां जाल्म उदरं श्रंशयित्वा कोश इवाबन्धः परिकृत्यमानः ॥७

प०—शतेन । पाशैः । अभि । धेहि । वरुण । एनम् । मा । ते । मोचि । अनृतऽवाक् । नृऽचक्षः । आस्ताम् । जाल्मः । उदरम् । श्रंशयित्वा । कोशःऽइव । अबन्धः । परिऽकृत्यमानः ॥७॥

भा०—हे वरुण शतेन शतसंख्याकैस्त्वदीयैः पाशैः एनम् अनृतवादिनं शत्रुम् अभि धेहि बधान । बद्ध्वा निगृहाणेत्यर्थः । अभिपूर्वो दधातिर्बन्धने वर्तते । यथा 'अश्वाभिधानीम् आ दत्ते' [ तै० सं० ५।१।२।१ ] इति । हे नृचक्षः नृणां मनुष्याणां साध्वसाधुचरित्राणां विवेकेन द्रष्टः । चक्षिङः असुनि 'असनयोश्च' इति ख्याञादेशाभावः । ईदृश हे वरुण अनृतवाक् अनृतं ब्रुवन् पुरुषः ते त्वत्तः [मा] मोचि

विमुक्तो विसृष्टो मा भूत्। किन्तु जाल्मः असमीक्ष्यकारी स्वकीयम् उदरं स्रंसयित्वा जलोदररोगेण स्रस्तं कृत्वा अबन्धः बन्धरहितः प्रान्तेषु अकृतबन्धनः असेः कोश इव परिकृत्यमानः आस्ताम् त्वत्पाशबद्ध एव वर्तताम्। अत एव अन्यत्राम्नातम्। 'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' [ तै० ब्रा० १। ७। २। ६ ] इति। परिकृत्यमान इति। 'कृती छेदने'। अस्मात् कर्मणि यक्।

अष्टमी—

मं०—यः स॒मा॒म्यो॒३ वरु॑णो॒ यो व्या॒म्यो॒३ यः सं॒दे॒श्यो॒३ वरु॑णो॒ यो वि॒दे॒श्यः॑। यो दै॒वो वरु॑णो॒ यश्च॒ मानु॑षः ॥८॥

प०—यः। स॒म्ऽआ॒म्यः॑। वरु॑णः। यः। वि॒ऽआ॒म्यः॑। यः। स॒म्ऽदे॒श्यः॑। वरु॑णः। यः। वि॒ऽदे॒श्यः॑। यः। दै॒वः। वरु॑णः। यः। च॒। मानु॑षः ॥८॥

भा०—समानम् आमयति व्याधितो भवति [पुरुषोऽनेनेति] समाम्यः। ईदृशो यो वरुणः। लुप्ततद्धितोऽयं निर्देशः। वारुणः। पाश इत्यर्थः। विगमनेन विविधं वा आमयति पुरुषोऽनेनेति व्याम्यो [यः] पाशः। तथा यो वरुणः वरुणसम्बन्धी पाशः संदेश्यः समानदेशे भवः यश्च विदेश्यः विदेशे भवः यश्च वरुणः वरुणसम्बन्धी पाशो दैवः देवेषु भवः यश्च वरुणपाशो मानुषः मनुष्येषु प्रयुक्तः। तैस्त्वा सर्वैरिति वक्ष्यमाणेन सम्बन्धः।

नवमी—

मं०—तैस्त्वा॒ सर्वै॑र॒भि ष्या॑मि॒ पाशै॑रसावामुष्या-

यणामुष्याः पुत्र । तानु ते सर्वाननुसं-
दिशामि ॥९॥

प०—तैः । त्वा । सर्वैः । अभि । स्यामि । पाशैः । असौ । आमुष्यायण । अमुष्याः । पुत्र । तान् । ऊं इति । ते । सर्वान् । अनुऽसं-
दिशामि ॥९॥

भा०—असावित्यस्य स्थाने सम्बुद्ध्या शत्रुनामग्रहणम् । आमुष्यायणेति गोत्रतो निर्देशः । अमुष्याः पुत्रेति अदः शब्दस्थाने मातृनामनिर्देशः । तद् अयम् अर्थः हे देवदत्तायाः पुत्र गार्ग्य यज्ञशर्मन् त्वा त्वां तैः पूर्वस्याम् ऋचि उक्तैः सर्वैः पाशैः अभि ष्यामि अभिदधामि । बध्नामीत्यर्थः । तथा हे शत्रो ते तुभ्यं तान् सर्वान् पाशान् अनुलक्षीकृत्य संदिशामि संप्रयच्छामि ।

# संग्रहेऽष्टादशं सूक्तम्

## ( द्वादशे काण्डे प्रथमं सूक्तम् )

मं०—सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति । सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥ १ ॥

प०—सत्यम् । बृहत् । ऋतम् । उग्रम् । दीक्षा । तपः । ब्रह्म । यज्ञः । पृथिवीम् । धारयन्ति । सा । नः । भूतस्य । भव्यस्य । पत्नी । उरुम् । लोकम् । पृथिवी । नः । कृणोतु ॥१॥

मं०—असंबाधं बध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु । नानावीर्या ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥२॥

प०—असम्ऽबाधम् । मध्यतः । मानवानाम् । यस्याः । उत्ऽवतः । प्रऽवतः । समम् । बहु । नानाऽवीर्याः । ओषधीः । या । बिभर्ति । पृथिवी । नः । प्रथताम् । राध्यताम् । नः ॥२

म०—यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः संबभूवुः । यस्यामिदं जिन्वति प्राणदेजत् सा नो भूमिः पूर्वपेये दधातु ॥३॥

प०—यस्याम् । समुद्रः । उत । सिन्धुः । आपः । यस्याम् । अन्नम् । कृष्टयः । सम्ऽबभूवुः । यस्याम् । इदम् । जिन्वति । प्राणत् । एजत् । सा । नः । भूमिः । पूर्वऽपेये । दधातु ॥३॥

म०—यस्याश्चतस्रः प्रदिशः पृथिव्या यस्यामन्नं कृष्टयः संबभूवुः । या बिभर्ति बहुधा प्राणदेजत् सा नो भूमिर्गोष्वप्यन्ने दधातु ॥४॥

प०—यस्याः । चतस्रः । प्रऽदिशः । पृथिव्याः । यस्याम् । अन्नम् । कृष्टयः । सम्ऽबभूवुः । या । बिभर्ति । बहुऽधा । प्राणत् । एजत् । सा । नः । भूमिः । गोषु । अपि । अन्ने । दधातु ॥ ४ ॥

म०—यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन् । गवामश्वानां वयसश्च विष्ठा भगं वर्चः पृथिवी नो दधातु ॥५॥

प०—यस्याम् । पूर्वे । पूर्वऽजनाः । विऽचक्रिरे । यस्याम् । देवाः । असुरान् । अभिऽअवर्तयन् । गवाम् । अश्वानाम् । वयसः । च । विऽस्था । भगम् । वर्चः । पृथिवी । नः । दधातु ॥५॥

म०—विश्वंभरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी । वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु ॥६॥

प०—विश्वम्ऽभरा । वसुऽधानी । प्रतिऽस्था । हिरण्यऽवक्षाः । जगतः । निऽवेशनी । वैश्वानरम् । बिभ्रती । भूमिः । अग्निम् । इन्द्रऽऋषभा । द्रविणे । नः । दधातु ॥६॥

म०—यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम् । सा नो मधु प्रियं दुहामथो उक्षतु वर्चसा ॥७॥

प०—याम् । रक्षन्ति । अस्वप्नाः । विश्वऽदानीम् । देवाः । भूमिम् । पृथिवीम् । अप्रऽमादम् । सा । नः । मधु । प्रियम् । दुहाम् । अथो इति । उक्षतु । वर्चसा ॥७॥

म०—यार्णवेऽधि सलिलमग्र आसीद् यां मायाभि-

रन्वचरन् मनीषिणः । यस्या हृदयं परमे व्योमन्त्सत्येनावृतममृतं पृथिव्याः । सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ॥८॥

प०—या । अर्णवे । अधि । सलिलम् । अग्रे । आसीत् । याम् । मायाभिः । अनुऽअचरन् । मनीषिणः । यस्याः । हृदयम् । परमे । विऽओमन् । सत्येन । आऽवृतम् । अमृतम् । पृथिव्याः । सा । नः । भूमिः । त्विषिम् । बलम् । राष्ट्रे । दधातु । उत्ऽतमे ॥८॥

म०—यस्यामापः परिचराः समानीरहोरात्रे अप्रमादं क्षरन्ति । सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षतु वर्चसा ॥९॥

प०—यस्याम् । आपः । परिऽचराः । समानीः । अहोरात्रे इति । अप्रऽमादम् । क्षरन्ति । सा । नः । भूमिः । भूरिऽधारा । पयः । दुहाम् । अथो इति । उक्षतु । वर्चसा ॥९॥

म०—यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे । इन्द्रो यां चक्र आत्मनेनमित्रां शचीपतिः ।

सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः ॥१०

प०—याम् । अश्विनौ । अमिमाताम् । विष्णुः । यस्याम् । विऽचक्रमे । इन्द्रः । याम् । चक्रे । आत्मने । अनमित्राम् । शचीऽपतिः । सा । नः । भूमिः । वि । सृजताम् । माता । पुत्राय । मे । पयः ॥१०॥

म०—गिरयस्ते पर्वता हिमवन्तोरण्यं ते पृथिवि स्योनमस्तु । बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् । अजीतोहतो अक्षतोध्यष्ठां पृथिवीमहम् ॥११॥

प०—गिरयः । ते । पर्वताः । हिमऽवन्तः । अरण्यम् । ते । पृथिवि । स्योनम् । अस्तु । बभ्रुम् । कृष्णाम् । रोहिणीम् । विश्वऽरूपाम् । ध्रुवाम् । भूमिम् । पृथिवीम् । इन्द्रऽगुप्ताम् । अजीतः । अहतः । अक्षतः । अधि । अस्थाम् । पृथिवीम् । अहम् ॥११॥

म०—यत् ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्ज-स्तन्वः संबभूवुः । तासु नो धेह्यभि नः

पवस्व माता भूमिः पुत्रो अहं पृथिव्याः ।
पर्जन्यः पिता स उ नः पिपर्तु ॥१२॥

प०—यत् । ते । मध्यम् । पृथिवि । यत् । च । नभ्यम् । याः । ते । ऊर्जः । तन्वः । सम्ऽबभूवुः । तासु । नः । धेहि । अभि । नः । पवस्व । माता । भूमिः । पुत्रः । अहम् । पृथिव्याः । पर्जन्यः । पिता । सः । ऊम् इति । नः । पिपर्तु ॥१२॥

म०—यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः । यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात् । सा नो भूमिर्वर्धयद् वर्धमाना ॥१३॥

प०—यस्याम् । वेदिम् । परिऽगृह्णन्ति । भूम्याम् । यस्याम् । यज्ञम् । तन्वते । विश्वऽकर्माणः । यस्याम् । मीयन्ते । स्वरवः । पृथिव्याम् । ऊर्ध्वाः । शुक्राः । आऽहुत्याः । पुरस्तात् । सा । नः । भूमिः । वर्धयत् । वर्धमाना ॥१३॥

म०—यो नो द्वेषत् पृथिवि यः पृतन्याद् योऽभि-

दासान्मनसा यो वधेन । तं नो भूमे रन्धय

पूर्वकृत्वरि ॥१४॥

प०—यः । नः । द्वेषत् । पृथिवि । यः । पृतन्यात् । यः ।

अभिऽदासात् । मनसा । यः । वधेन । तम् । नः । भूमे ।

रन्धय । पूर्वऽकृत्वरि ॥१४॥

म०—त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि

द्विपदस्त्वं चतुष्पदः । तवेमे पृथिवि पञ्च

मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य उद्य-

न्त्सूर्यो रश्मिभिरातनोति ॥१५॥

प०—त्वत् । जाताः । त्वयि । चरन्ति । मर्त्याः । त्वम् । बिभर्षि ।

द्विऽपदः । त्वम् । चतुःऽपदः । तव । इमे । पृथिवि ।

पञ्च । मानवाः । येभ्यः । ज्योतिः । अमृतम् । मर्त्येभ्यः ।

उत्ऽयन् । सूर्यः । रश्मिऽभिः । आऽतनोति ॥१५॥

म०—ता नः प्रजाः सं दुहतां समग्रा वाचो

मधु पृथिवि धेहि मह्यम् ॥१६॥

प०—ताः । नः । प्रऽजाः । सम् । दुहताम् । सम्ऽअग्राः । वाचः ।

मधु । पृथिवि । धेहि । मह्यम् ॥१६॥

म०—विश्वस्वं मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम् । शिवां स्योनामनु चरेम विश्वहा ॥१७॥

प०—विश्वऽस्वम् । मातरम् । ओषधीनाम् । ध्रुवाम् । भूमिम् । पृथिवीम् । धर्मणा । धृताम् । शिवाम् । स्योनाम् । अनु । चरेम । विश्वहा ॥१७॥

म०—महत् सधस्थं महती बभूविथ महान् वेग एजथुर्वेपथुष्टे । महांस्त्वेन्द्रो रक्षत्यप्रमादम् । सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि मा नो द्विक्षत कश्चन ॥१८॥

प०—महत् । सधऽस्थम् । महती । बभूविथ । महान् । वेगः । एजथुः । वेपथुः । ते । महान् । त्वा । इन्द्रः । रक्षति । अप्रऽमादम् । सा । नः । भूमे । प्र । रोचय । हिरण्यस्य-ऽइव । सम्ऽदृशि । मा । नः । द्विक्षत । कः । चन ॥१८॥

म०—अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निर-

श्मसु । अग्निरन्तः पुरुषेषु गोष्वश्वेष्वग्नयः ॥१९

प०—अग्निः । भूम्याम् । ओषधीषु । अग्निम् । आपः । बिभ्रति । अग्निः । अश्मऽसु । अग्निः । अन्तः । पुरुषेषु । गोषु । अश्वेषु । अग्नयः ॥१९॥

म०—अग्निर्दिव आ तपत्यग्नेर्देवस्योर्व१न्तरिक्षम् । अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम् ॥२०

प०—अग्निः । दिवः । आ । तपति । अग्नेः । देवस्य । उरु । अन्तरिक्षम् । अग्निम् । मर्तासः । इन्धते । हव्यऽवाहम् । घृतऽप्रियम् ॥२०॥

म०—अग्निवासाः पृथिव्यसितज्ञूस्त्विषीमन्तं संशितं मा कृणोतु ॥२१॥

प०—अग्निऽवासाः । पृथिवी । असितऽज्ञूः । त्विषिऽमन्तम् । समऽशितम् । मा । कृणोतु ॥२१॥

म०—भूम्यां देवेभ्यो ददति यज्ञं हव्यमरंकृतम् । भूम्यां मनुष्या जीवन्ति स्वधयान्नेन मर्त्याः । सा नो भूमिः प्राणमायुर्दधातु जरदष्टिं मा

पृथिवी कृणोतु ॥२२॥

प०—भूम्याम् । देवेभ्यः । ददति । यज्ञम् । हव्यम् । अरम्ऽकृतम् । भूम्याम् । मनुष्याः । जीवन्ति । स्वधया । अन्नेन । मर्त्याः । सा । नः । भूमिः । प्राणम् । आयुः । दधातु । जरत्ऽअष्टिम् । मा । पृथिवी । कृणोतु ॥२२॥

म०—यस्ते गन्धः पृथिवि संबभूव यं बिभ्रत्योषधयो यमापः । यं गन्धर्वा अप्सरसश्च भेजिरे तेन मा सुरभिं कृणु मा नो द्विक्षत कश्चन ॥२३

प०—यः । ते । गन्धः । पृथिवि । सम्ऽबभूव । यम् । बिभ्रति । ओषधयः । यम् । आपः । यम् । गन्धर्वाः । अप्सरसः । च । भेजिरे । तेन । मा । सुरभिम् । कृणु । मा । नः । द्विक्षत । कः । चन ॥२३॥

म०—यस्ते गन्धः पुष्करमाविवेश यं संजभ्रुः सूर्याया विवाहे । अमर्त्याः पृथिवि गन्धमग्रे तेन मा सुरभिं कृणु मा नो द्विक्षत कश्चन ॥२४

प०—यः । ते । गन्धः । पुष्करम् । आऽविवेश । यम् । सम्-

ऽजभ्रुः । सूर्यायाः । विऽवाहे । अमर्त्याः । पृथिवि । गन्धम् ।
अग्रे । तेन । मा । सुरभिम् । कृणु । मा । नः । द्विक्षत । कः ।
चन ॥२४॥

म०—यस्ते गन्धः पुरुषेषु स्त्रीषु पुंसु भगो रुचिः ।
यो अश्वेषु वीरेषु यो मृगेषूत हस्तिषु ।
कन्यायां वर्चो यद् भूमे तेनास्माँ अपि सं सृज
मा नो द्विक्षत कश्चन ॥२५॥

प०—यः । ते । गन्धः । पुरुषेषु । स्त्रीषु । पुम्ऽसु । भगः । रुचिः ।
यः । अश्वेषु । वीरेषु । यः । मृगेषु । उत । हस्तिषु ।
कन्यायाम् । वर्चः । यत् । भूमे । तेन । अस्मान् । अपि ।
सम् । सृज । मा । नः । द्विक्षत । कः । चन ॥२५॥

म०—शिला भूमिरश्मा पांसुः सा भूमिः संधृता
धृता । तस्यै हिरण्यवक्षसे पृथिव्या अकरं
नमः ॥२६॥

प०—शिला । भूमिः । अश्मा । पांसुः । सा । भूमिः । सम्ऽधृता । धृता । तस्यै । हिरण्यऽवक्षसे । पृथिव्यै । अकरम् ।
नमः ॥२६॥

म०—यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा। पृथिवीं विश्वधायसं धृतामच्छावदामसि ॥२७॥

प०—यस्याम्। वृक्षाः। वानस्पत्याः। ध्रुवाः। तिष्ठन्ति। विश्वहा। पृथिवीम्। विश्वऽधायसम्। धृताम्। अच्छऽआवदामसि ॥२७॥

म०—उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः। पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम् ॥२८॥

प०—उत्ऽईराणाः। उत। आसीनाः। तिष्ठन्तः। प्रऽक्रामन्तः। पत्ऽभ्याम्। दक्षिणऽसव्याभ्याम्। मा। व्यथिष्महि। भूम्याम् ॥२८॥

म०—विमृग्वरीं पृथिवीमा वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम्। ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाभि नि षीदेम भूमे ॥२९॥

प०—विऽमृग्वरीम्। पृथिवीम्। आ। वदामि। क्षमाम्। भूमिम्।

ब्रह्मणा । वृद्धधानाम् । ऊर्जम् । पुष्टम् । बिभ्रतीम् । अन्नऽभागम् । घृतम् । त्वा । अभि । नि । सीदेम । भूमे ॥२९॥

म०—शुद्धा न आपस्तन्वे क्षरन्तु यो नः सेदुरप्रिये तं नि दध्मः । पवित्रेण पृथिवि मोत् पुनामि ॥३०॥

प०—शुद्धाः । नः । आपः । तन्वे । क्षरन्तु । यः । नः । सेदुः । अप्रिये । तम् । नि । दध्मः । पवित्रेण । पृथिवि । मा । उत् । पुनामि ॥३०॥

म०—यास्ते प्राचीः प्रदिशो या उदीचीर्यास्ते भूमे अधराद् याश्च पश्चात् । स्योनास्ता मह्यं चरते भवन्तु मा नि पप्तं भुवने शिश्रियाणः ॥ ३१ ॥

प०—याः । ते । प्राचीः । प्रऽदिशः । याः । उदीचीः । याः । ते । भूमे । अधरात् । याः । च । पश्चात् । स्योनाः । ताः । मह्यम् । चरते । भवन्तु । मा । नि । पप्तम् । भुवने शिश्रियाणः ॥ ३१ ॥

म०—मा नः पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादध-
राद॒त। स्वस्ति भूमे नो भव मा विदन् परिप-
न्थिनो वरीयो यावया वधम् ॥३२॥

प०—मा। नः। पश्चात्। मा। पुरस्तात्। नुदिष्ठाः। मा।
उत्तरात्। अधरात्। उत। स्वस्ति। भूमे। नः। भव। मा।
विदन्। परिऽपन्थिनः। वरीयः। यवय। वधम् ॥३२॥

म०—यावत् तेऽभि विपश्यामि भूमे सूर्येण मेदिना।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥३३॥

प०—यावत्। ते। अभि। विऽपश्यामि। भूमे। सूर्येण। मेदिना।
तावत्। मे। चक्षुः। मा। मेष्ट। उत्तराम्ऽउत्तराम्।
समाम् ॥३३॥

म०—यच्छयानः पर्यावर्ते दक्षिणं सव्यमभि भूमे
पार्श्वम्। उत्तानास्त्वा प्रतीचीं यत् पृष्टीभि-
रधिशेमहे। मा हिंसीस्तत्र नो भूमे सर्वस्य
प्रतिशीवरि ॥३४॥

प०—यत्। शयानः। परिऽआवर्ते। दक्षिणम्। सव्यम्।

अभि । भूमे । पार्श्वम् । उत्तानाः । त्वा । प्रतीचीम् । यत् ।
पृष्टीभिः । अधिऽशेमहे । मा । हिंसीः । तत्र । नः ।
भूमे । सर्वस्य । प्रतिऽशीवरि ॥३४॥

म०—यत् ते भूमे विखनामि क्षिप्रं तदपि रोहतु ।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम् ॥३५॥

प०—यत् । ते । भूमे । विऽखनामि । क्षिप्रम् । तत् । अपि ।
रोहतु । मा । ते । मर्म । विऽमृग्वरि । मा । ते । हृदयम् ।
अर्पिपम् ॥३५॥

म०—ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो
वसन्तः । ऋतवस्ते विहिता हायनीरहोरात्रे
पृथिवि नो दुहाताम् ॥३६॥

प०—ग्रीष्मः । ते । भूमे । वर्षाणि । शरत् । हेमन्तः । शिशिरः ।
वसन्तः । ऋतवः । ते । विऽहिताः । हायनीः । अहोरात्रे
इति । पृथिवि । नः । दुहाताम् ॥३६॥

म०—याप सर्पं विजमाना विमृग्वरी यस्यामास-
न्नग्नयो ये अप्स्वन्तः । परा दस्यून् ददती

देवपीयूनिन्द्रं वृणाना पृथिवी न वृत्रम् ।
शक्राय दध्रे वृषभाय वृष्णे ॥३७॥

प०—या । अप । सर्पम् । विजमाना । विऽमृग्वरी । यस्याम् । आसन् । अग्नयः । ये । अप्ऽसु । अन्तः । परा । दस्यून् । ददती । देवऽपीयून् । इन्द्रम् । वृणाना । पृथिवी । न । वृत्रम् । शक्राय । दध्रे । वृषभाय । वृष्णे ॥३७॥

म०—यस्यां सदोहविर्धाने यूपो यस्यां निमीयते ।
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः ।
युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे ॥३८॥

प०—यस्याम् । सदोहविर्धाने इति सदःऽहविर्धाने । यूपः । यस्याम् । निऽमीयते । ब्रह्माणः । यस्याम् । अर्चन्ति । ऋक्ऽभिः । साम्ना । यजुःऽविदः । युज्यन्ते । यस्याम् । ऋत्विजः । सोमम् । इन्द्राय । पातवे ॥३८॥

म०—यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः ।
सप्त सत्रेण वेधसो यज्ञेन तपसा सह ॥३९॥

प०—यस्याम् । पूर्वे । भूतऽकृतः । ऋषयः । गाः । उत । आनृचुः ।
सप्त । सत्त्रेण । वेधसः । यज्ञेन । तपसा । सह ॥३९॥

म०—सा नो भूमिरा दिशतु यद्धनं कामयामहे ।
भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः ॥४०॥

प०—सा । नः । भूमिः । आ । दिशतु । यत् । धनम् । कामयामहे ।
भगः । अनुऽप्रयुङ्क्ताम् । इन्द्रः । एतु । पुरःऽगवः ॥४०॥

म०—यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलबाः । युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः । सा नो भूमिः प्र णुदतां सपत्नानसपत्नं मा पृथिवी कृणोतु ॥४१॥

यस्याम् । गायन्ति । नृत्यन्ति । भूम्याम् । मर्त्याः ।
विऽऐलबाः । युध्यन्ते । यस्याम् । आऽक्रन्दः । यस्याम् ।
वदति । दुन्दुभिः । सा । नः । भूमिः । प्र । नुदताम् ।
सऽपत्नान् । असपत्नम् । मा । पृथिवी । कृणोतु ॥४१॥

म०—यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः ।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे ॥४२॥

प०—यस्याम् । अन्नम् । व्रीहिऽयवौ । यस्याः । इमाः । पञ्च । कृष्टयः । भूम्यै । पर्जन्यऽपत्न्यै । नमः । अस्तु । वर्षऽमेदसे ॥४२॥

म०—यस्याः पुरो देवकृताः क्षेत्रे यस्या विकुर्वते । प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां रण्यां नः कृणोतु ॥४३॥

प०—यस्याः । पुरः । देवऽकृताः । क्षेत्रे । यस्याः । विऽकुर्वते । प्रजाऽपतिः । पृथिवीम् । विश्वऽगर्भाम् । आशाम्ऽआशाम् । रण्याम् । नः । कृणोतु ॥४३॥

म०—निधिं बिभ्रती बहुधा गुहा वसु मणिं हिरण्यं पृथिवी ददातु मे । वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाना ॥४४॥

प०—निऽधिम् । बिभ्रती । बहुऽधा । गुहा । वसु । मणिम् । हिरण्यम् । पृथिवी । ददातु । मे । वसूनि । नः । वसुऽदाः । रासमाना । देवी । दधातु । सुऽमनस्यमाना ॥४४॥

म०—जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं

पृथिवी यथौकसम् । सहस्रं धारा द्रविणस्य मे दुहां ध्रुवेव धेनुरनपस्फुरन्ती ॥४५॥

प०—जनम् । बिभ्रती । बहुऽधा । विऽवाचसम् । नानाऽधर्माणम् । पृथिवी । यथाऽओकसम् । सहस्रम् । धाराः । द्रविणस्य । मे । दुहाम् । ध्रुवाऽइव । धेनुः । अनपऽस्फुरन्ती ॥४५॥

म०—यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा हेमन्तजब्धो भृमलो गुहा शये । क्रिमिर्जिन्वत् पृथिवि यद्यदेजति प्रावृषि तन्नः सर्पन्मोप सृपद् यच्छिवं तेन नो मृड ॥४६॥

प०—यः । ते । सर्पः । वृश्चिकः । तृष्टऽदंश्मा । हेमन्तऽजब्धः । भृमलः । गुहा । शये । क्रिमिः । जिन्वत् । पृथिवि । यत्ऽयत् । एजति । प्रावृषि । तत् । नः । सर्पत् । मा । उप । सृपत् । यत् । शिवम् । तेन । नः । मृड ॥४६॥

म०—ये ते पन्थानो बहवो जनायना रथस्य वर्त्मानसश्च यातवे । यैः संचरन्त्युभये भद्रपापास्तं पन्थानं जयेमानमित्रमतस्करं यच्छिवं तेन नो मृड ॥४७॥

प०—ये । ते । पन्थानः । बहवः । जनऽअयनाः । रथस्य । वर्त्म । अनसः । च । यातवे । यैः । सम्ऽचरन्ति । उभये । भद्रऽपापाः । तम् । पन्थानम् । जयेम । अनमित्रम् । अतस्करम् । यत् । शिवम् । तेन । नः । मृड ॥४७॥

म०—मल्वं बिभ्रती गुरुभृद् भद्रपापस्य निधनं तितिक्षुः । वराहेण पृथिवी संविदाना सूकराय वि जिहीते मृगाय ॥४८॥

प०—मल्वम् । बिभ्रती । गुरुऽभृत् । भद्रऽपापस्य । निऽधनम् । तितिक्षुः । वराहेण । पृथिवी । सम्ऽविदाना । सूकराय । वि । जिहीते । मृगाय ॥४८॥

म०—ये त आरण्याः पशवो मृगा वने हिताः सिंहा व्याघ्राः पुरुषादश्चरन्ति । उलं वृकं पृथिवि दुच्छुनामित ऋक्षीकां रक्षो अप बाधयास्मत् ॥४९॥

प०—ये । ते । अरण्याः । पशवः । मृगाः । वने । हिताः । सिंहाः । व्याघ्राः । पुरुषऽअदः । चरन्ति । उलम् । वृकम् ।

पृथिवि । दुच्छुनाम् । इतः । ऋक्षीकाम् । रक्षः । अप ।
बाधय । अस्मत् ॥४९॥

म०—ये गन्धर्वा अप्सरसो ये चारायाः किमीदिनः ।
पिशाचान्त्सर्वा रक्षांसि तानस्मद् भूमे
यावय ॥५०॥

प०—ये । गन्धर्वाः । अप्सरसः । ये । च । अरायाः ।
किमीदिनः । पिशाचान् । सर्वा । रक्षांसि । तान् । अस्मत् ।
भूमे । यवय ॥५०॥

म०—यां द्विपादः पक्षिणः संपतन्ति हंसाः सुपर्णाः
शकुना वयांसि । यस्यां वातो मातरिश्वेयते
रजांसि कृण्वंश्च्यावयंश्च वृक्षान् । वातस्य
प्रवामुपवामनु वात्यर्चिः ॥५१॥

प०—याम् । द्विऽपादः । पक्षिणः । सम्ऽपतन्ति । हंसाः । सुऽपर्णाः ।
शकुनाः । वयांसि । यस्याम् । वातः । मातरिश्वा । ईयते ।
रजांसि । कृण्वन् । च्यवयन् । च । वृक्षान् । वातस्य ।
प्रऽवाम् । उपऽवाम् । अनु । वाति । अर्चिः ॥५१॥

म०—यस्यां कृष्णमरुणं च संहिते अहोरात्रे विहिते भूम्यामधि । वर्षेण भूमिः पृथिवी वृतावृता सा नो दधातु भद्रया प्रिये धामनिधामनि ॥५२॥

प०—यस्याम् । कृष्णम् । अरुणम् । च । संहिते इति सम्ऽहिते । अहोरात्रे इति । विहिते इति विऽहिते । भूम्याम् । अधि । वर्षेण । भूमिः । पृथिवी । वृता । आऽवृता । सा । नः । दधातु । भद्रया । प्रिये । धामनि ऽधामनि ॥५२॥

म०—द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः । अग्निः सूर्य आपो मेधां विश्वे देवाश्च सं ददुः ॥ ५३ ॥

प०—द्यौः । च । मे । इदम् । पृथिवी । च । अन्तरिक्षम् । च । मे । व्यचः । अग्निः । सूर्यः । आपः । मेधाम् । विश्वे । देवाः । च । सम् । ददुः ॥५३॥

म—अहमस्मि सहमान उत्तरो नाम भूम्याम् ।

अभीषाडस्मि विश्वाषाडाशामाशां विषा-
सहिः ॥५४॥

प०—अहम् । अस्मि । सहमानः । उत्तरः । नाम । भूम्याम् ।
अभीषाट् । अस्मि । विश्वाषाट् । आशाम्ऽआशाम् ।
विऽससहिः ॥५४॥

म०—अदो यद् देवि प्रथमाना पुरस्ताद् देवैरुक्ता
व्यसर्पो महित्वम् । आ त्वा सुभूतमविशत्
तदानीमकल्पयथाः प्रदिशश्चतस्रः ॥५५॥

प०—अदः । यत् । देवि । प्रथमाना । पुरस्तात् । देवैः ।
उक्ता । विऽअसर्पः । महिऽत्वम् । आ । त्वा । सुऽभूतम् ।
अविशत् । तदानीम् । अकल्पयथाः । प्रऽदिशः ।
चतस्रः ॥५५॥

म०—ये ग्रामा यदरण्यं याः सभा अधि भूम्याम् ।
ये संग्रामाः समितयस्तेषु चारु वदेम
ते ॥५६॥

प०—ये । ग्रामाः । यत् । अरण्यम् । याः । सभाः । अधि ।

भूम्याम् । ये । सम्ऽग्रामाः । सम्ऽइतयः । तेषु । चारु । वदेम । ते ॥५६॥

म०—अश्व इव रजो दुधुवे वि तान् जनान् य आक्षियन् पृथिवीं यादजायत । मन्द्राग्रेत्वरी भुवनस्य गोपा वनस्पतीनां गृभिरोषधीनाम् ॥५७॥

प०—अश्वःऽइव । रजः । दुधुवे । वि । तान् । जनान् । ये । आऽअक्षियन् । पृथिवीम् । यात् । अजायत । मन्द्रा । अग्रऽइत्वरी । भुवनस्य । गोपाः । वनस्पतीनाम् । गृभिः । ओषधीनाम् ॥५७॥

म०—यद् वदामि मधुमत् तद् वदामि यदीक्षे तद् वनन्ति मा । त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधतः ॥५८॥

प०— यत् । वदामि । मधुऽमत् । तत् । वदामि । यत् । ईक्षे । तत् । वनन्ति । मा । त्विषिऽमान् । अस्मि । जूतिऽमान् । अव । अन्यान् । हन्मि । दोधतः ॥५८॥

म०—शन्तिवा सुरभिः स्योना कीलालोध्नी पयस्वती । भूमिरधि ब्रवीतु मे पृथिवी पयसा सह ॥५९॥

प०—शन्तिऽवा । सुरभिः । स्योना । कीलालऽऊध्नी । पयस्वती । भूमिः । अधि । ब्रवीतु । मे । पृथिवी । पयसा । सह ॥ ५९ ॥

म०—यामन्वैच्छद्धविषा विश्वकर्मान्तरर्णवे रजसि प्रविष्टाम् । भुजिष्यं१पात्रं निहितं गुहा यदाविर्भोगे अभवन्मातृमद्भ्यः ॥६०॥

प०—याम् । अनुऽऐच्छत् । हविषा । विश्वऽकर्मा । अन्तः । अर्णवे । रजसि । प्रऽविष्टाम् । भुजिष्यम् । पात्रम् । निऽहितम् । गुहा । यत् । आविः । भोगे । अभवत् । मातृमत्ऽभ्यः ॥६०॥

म०—त्वमस्यावपनी जनानामदितिः कामदुघा पप्रथाना । यत् त ऊनं तत् त आ पूरयाति प्रजापतिः प्रथमजा ऋतस्य ॥६१॥

प०—त्वम् । असि । आऽवपनी । जनानाम् । अदितिः । कामऽदुघा । पप्रथाना । यत् । ते । ऊनम् । तत् । ते । आ । पूरयाति । प्रजाऽपतिः । प्रथमऽजाः । ऋतस्य ॥६१॥

म०—उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवि प्रसूताः । दीर्घं न आयुः प्रतिबुध्यमाना वयं तुभ्यं बलिहृतः स्याम ॥६२॥

प०—उपऽस्थाः । ते । अनमीवाः । अयक्ष्माः । अस्मभ्यम् । सन्तु । पृथिवि । प्रऽसूताः । दीर्घम् । नः । आयुः । प्रतिऽबुध्यमानाः । वयम् । तुभ्यम् । बलिऽहृतः । स्याम ॥६२॥

म०—भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम् । संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥६३॥

प०—भूमे । मातः । नि । धेहि । मा । भद्रया । सुऽप्रतिस्थितम् । सम्ऽविदाना । दिवा । कवे । श्रियाम् । मा । धेहि । भूत्याम् ॥६३॥

———

# संग्रहे ऊनविंशं सूक्तम्

## (त्रयोदशे काण्डे तृतीयं सूक्तम्)

म०—य इमे द्यावापृथिवी जजान यो द्रापिं कृत्वा भुवनानि वस्ते । यस्मिन् क्षियन्ति प्रदिशः षडुर्वीर्याः पतङ्गो अनु विचाकशीति । तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति । उद् वेपय रोहित प्र क्षिणीहि ब्रह्म-ज्यस्य प्रति मुञ्च पाशान् ॥१॥

प०—यः । इमे इति । द्यावापृथिवी इति । जजान । यः । द्रापिम् । कृत्वा । भुवनानि । वस्ते । यस्मिन् । क्षियन्ति । प्रऽदिशः । षट् । उर्वीः । याः । पतङ्गः । अनु । विऽचा-कशीति । तस्य । देवस्य । क्रुद्धस्य । एतत् । आगः । यः । एवम् । विद्वांसम् । ब्राह्मणम् । जिनाति । उत् । वेपय । रोहित । प्र । क्षिणीहि । ब्रह्मऽज्यस्य । प्रति । मुञ्च । पाशान् ॥ १ ॥

म०—यस्माद् वाता ऋतुथा पवन्ते यस्मात् समुद्रा
अधि विक्षरन्ति । तस्य देवस्य ० ॥२॥

प०—यस्मात् । वाताः । ऋतुऽथा । पवन्ते । यस्मात् । समुद्राः ।
अधि । विऽक्षरन्ति । तस्य । ० ॥ २ ॥

म०—यो मारयति प्राणयति यस्मात् प्राणन्ति
भुवनानि विश्वा । तस्य० ॥३॥

प०—यः । मारयति । प्राणयति । यस्मात् । प्राणन्ति । भुव
नानि । विश्वा । तस्य । ० ॥ ३ ॥

म०—यः प्राणेन द्यावापृथिवी तर्पयत्यपानेन समु-
द्रस्य जठरं यः पिपर्ति । तस्य० ॥४॥

प०—यः । प्राणेन । द्यावापृथिवी इति । तर्पयति । अपानेन ।
समुद्रस्य । जठरम् । यः । पिपर्ति । तस्य । ० ॥ ४ ॥

म०—यस्मिन् विराट् परमेष्ठी प्रजापतिरग्निर्वैश्वानरः
सह पङ्क्त्या श्रितः । यः परस्य प्राणं परमस्य
तेज आददे । तस्य० ॥५॥

प०—यस्मिन् । विऽराट् । परमेऽस्थी । प्रजाऽपतिः । अग्निः ।

वैश्वानरः । सह । पङ्क्त्या । श्रितः । यः । परस्य ।
प्राणम् । परमस्य । तेजः । आऽददे । तस्य । ० ॥ ५ ॥

म०—यस्मिन् षडुर्वीः पञ्च दिशो अधि श्रिताश्च-
तस्र आपो यज्ञस्य त्रयोक्षराः । यो अन्तरा
रोदसी क्रुद्धश्चक्षुषैक्षत । तस्य० ॥ ६ ॥

प०—यस्मिन् । षट् । उर्वीः । पञ्च । दिशः । अधि । श्रिताः ।
चतस्रः । आपः । यज्ञस्य । त्रयः । अक्षराः । यः ।
अन्तरा । रोदसी इति । क्रुद्धः । चक्षुषा । ऐक्षत ।
तस्य । ० ॥ ६ ॥

म०—यो अन्नादो अन्नपतिर्बभूव ब्रह्मणस्पतिरुत
यः । भूतो भविष्यद् भुवनस्य यस्पतिः ।
तस्य० ॥ ७ ॥

प०—यः । अन्नऽअदः । अन्नऽपतिः । बभूव । ब्रह्मणः । पतिः ।
उत । यः । भूतः । भविष्यत् । भुवनस्य । यः । पतिः ।
तस्य । ० ॥ ७ ॥

म०—अहोरात्रैर्विमितं त्रिंशदङ्गं त्रयोदशं मासं
यो निर्मिमीते । तस्य० ॥ ८ ॥

प०—अहोरात्रैः । विऽमितम् । त्रिंशत्ऽअङ्गम् । त्रयःऽदशम् ।

मासम् । यः । निःऽमिमीते । तस्य । ० ॥ ८ ॥

म०—कृष्णं नियानं हरयः सुपर्णा अपो वसाना

दिवमुत् पतन्ति । त आववृत्रन्त्सदनादृ-

तस्य । तस्य० ॥ ९ ॥

प०—कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः ।

वसानाः । दिवम् । उत् । पतन्ति । ते । आ । अववृत्रन् ।

सदनात् । ऋतस्य । तस्य । ० ॥ ९ ॥

म०—यत् ते चन्द्रं कश्यप रोचनावद् यत् संहितं

पुष्कलं चित्रभानु । यस्मिन्त्सूर्या आर्पिताः

सप्त साकम् । तस्य० ॥ १० ॥

प०—यत् । ते । चन्द्रम् । कश्यप । रोचनऽवत् । यत् ।

सम्ऽहितम् । पुष्कलम् । चित्रऽभानु । यस्मिन् । सूर्याः ।

आर्पिताः । सप्त । साकम् । तस्य । ० ॥ १० ॥

म०—बृहदेनमनु वस्ते पुरस्ताद् रथंतरं प्रति

गृह्णाति पश्चात् । ज्योतिर्वसाने सदमप्रमा-
दम् । तस्य० ॥ ११ ॥

प०—बृहत् । एनम् । अनु । वस्ते । पुरस्तात् । रथम्ऽतरम् ।
प्रति । गृह्णाति । पश्चात् । ज्योतिः । वसाने इति । सदम् ।
अप्रऽमादम् । तस्य । ० ॥ ११ ॥

म०—बृहदन्यतः पक्ष आसीद् रथंतरमन्यतः
सबले सध्रीची । यद् रोहितमजनयन्त
देवाः । तस्य० ॥ १२ ॥

प०—बृहत् । अन्यतः । पक्षः । आसीत् । रथम्ऽतरम् ।
अन्यतः । सबले इति सऽबले । सध्रीची इति । यत् ।
रोहितम् । अजनयन्त । देवाः । तस्य । ० ॥ १२ ॥

म०—स वरुणः सायमग्निर्भवति स मित्रो भवति
प्रातरुद्यन् । स सविता भूत्वान्तरिक्षेण
याति स इन्द्रो भूत्वा तपति मध्यतो दिवम् ।
तस्य० ॥ १३ ॥

प०—सः । वरुणः । सायम् । अग्निः । भवति । सः । मित्रः ।

भवति । प्रातः । उत्ऽयन् । सः । सविता । भूत्वा ।
अन्तरिक्षेण । याति । यः । इन्द्रः । भूत्वा । तपति ।
मध्यतः । दिवम् । तस्य । ० ॥ १३ ॥

म०—सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् । स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा । तस्य० ॥ १४ ॥

प०—सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् । सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा । तस्य । ० ॥ १४ ॥

म०—अयं स देवो अप्स्व१न्तः सहस्रमूलः पुरुशाको अत्त्रिः । य इदं विश्वं भुवनं जजान । तस्य० ॥ १५ ॥

प०—अयम् । सः । देवः । अप्ऽसु । अन्तः । सहस्रऽमूलः । पुरुऽशाकः । अत्त्रिः । यः । इदम् । विश्वम् । भुवनम् । जजान । तस्य । ० ॥ १५ ॥

म०—शुक्रं वहन्ति हरयो रघुष्यदो देवं दिवि

वर्चसा भ्राजमानम् । यस्योर्ध्वा दिवं तन्वः स्तपन्त्यर्वाङ् सुवर्णैः पटरैर्वि भाति । तस्य० ॥ १६ ॥

प०—शुक्रम् । वहन्ति । हरयः । रघुऽस्यदः । देवम् । दिवि । वर्चसा । भ्राजमानम् । यस्य । ऊर्ध्वाः । दिवम् । तन्वः । तपन्ति । अर्वाङ् । सुऽवर्णैः । पटरैः । वि । भाति । तस्य । ० ॥ १६ ॥

म०—येनादित्यान् हरितः संवहन्ति येन यज्ञेन बहवो यन्ति प्रजानन्तः । यदेकं ज्योतिर्बहुधा विभाति । तस्य० ॥ १७ ॥

प०—येन । आदित्यान् । हरितः । सम्ऽवहन्ति । येन । यज्ञेन । बहवः । यन्ति । । प्रऽजानन्तः । यत् । एकम् । ज्योतिः । बहुऽधा । विऽभाति । तस्य । ० ॥१७॥

म०—सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः । तस्य० ॥ १८ ॥

प०—सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् । एकः । अश्वः । वहति । सप्तऽनामा । त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः । तस्य ।० ॥१८॥

म०—अष्टधा युक्तो वहाति वह्निरुग्रः पिता देवानां जनिता मतीनाम् । ऋतस्य तन्तुं मनसा मिमानः सर्वा दिशः पवते मातरिश्वा । तस्य० ॥१९॥

प०—अष्टऽधा । युक्तः । वहति । वह्निः । उग्रः । पिता । देवानाम् । जनिता । मतीनाम् । ऋतस्य । तन्तुम् । मनसा । मिमानः । सर्वाः । दिशः । पवते । मातरिश्वा । तस्य । ० ॥ १९ ॥

म०—सम्यञ्चं तन्तुं प्रदिशोनु सर्वा अन्तर्गायत्र्यामम‍ृतस्य गर्भे । तस्य० ॥२०॥

प०—सम्यञ्चम् । तन्तुम् । प्रऽदिशः । अनु । सर्वाः । अन्तः । गायत्र्याम् । अमृतस्य । गर्भे । तस्य । ० ॥ २० ॥

म०—निम्रुचस्तिस्रो व्युषो ह तिस्रस्त्रीणि रजांसि दिवो अङ्ग तिस्रः । विद्मा ते अग्ने त्रेधा जनित्रं त्रेधा देवानां जनिमानि विद्म । तस्य० ॥२१॥

प०—निऽम्रुचः । तिस्रः । विऽउषः । ह । तिस्रः । त्रीणि । रजांसि । दिवः । अङ्ग । तिस्रः । विद्म । ते । अग्ने । त्रेधा । जनित्रम् । त्रेधा । देवानाम् । जनिमानि । विद्म । तस्य । ० ॥२१॥

म०—वि य और्णोत् पृथिवीं जायमान आ समुद्रमदधादन्तरिक्षे । तस्य० ॥२२॥

प०—वि । यः । और्णोत् । पृथिवीम् । जायमानः । आ । समुद्रम् । अदधात् । अन्तरिक्षे । तस्य । ० ॥ २२ ॥

म०—त्वमग्ने क्रतुभिः केतुभिर्हितोऽर्कः समिद्ध उदरोचथा दिवि । किमभ्यार्चन्मरुतः पृश्निमातरो यद् रोहितमजनयन्त देवाः । तस्य० ॥२३॥

प०—त्वम् । अग्ने । क्रतुऽभिः । केतुऽभिः । हितः । अर्कः । सम्ऽइद्धः । उत । अरोचथाः । दिवि । किम् । अभि । आर्चन् । मरुतः । पृश्निऽमातरः । यत् । रोहितम् । अजनयन्त । देवाः । तस्य । ० ॥ २३ ॥

म०—य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । योऽस्येशे द्विपदो यश्चतुष्पदः । तस्य० ॥२४॥

प०—यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽआसते । प्रऽशिषम् । यस्य । देवाः । यः । अस्य । ईशे । द्विऽपदः । यः । चतुःऽपदः । तस्य । ० ॥ २४ ॥

म०—एकपाद् द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् । चतुष्पाच्चक्रे द्विपदामभिस्वरे संपश्यन् पंक्तिमुपातिष्ठमानः । तस्य देवस्य । क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति । उद् वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ॥२५॥

प०—एकऽपात् । द्विऽपदः । भूयः । वि । चक्रमे । द्विऽपात् । त्रिऽपादम् । अभि । एति । पश्चात् । चतुःपात् । चक्रे । द्विऽपादम् । अभिऽस्वरे । सम्ऽपश्यन् । पङ्क्तिम् । उपऽतिष्ठमानः । तस्य । देवस्य । क्रुद्धस्य । एतत् । आगः । यः । एवम् । विद्वांसम् । ब्राह्मणम् । जिनाति । उत् । वेपय । रोहित । प्र । क्षिणीहि । ब्रह्मऽज्यस्य । प्रति । मुञ्च । पाशान् ॥ २५ ॥

म०—कृष्णायाः पुत्रो अर्जुनो रात्र्या वत्सोजायत ।
स ह द्यामधि रोहति रुहो रुरोह रोहितः ॥२६॥

प०—कृष्णायाः । पुत्रः । अर्जुनः । रात्र्याः । वत्सः । अजायत । सः । ह । द्याम् । अधि । रोहति । रुहः । रुरोह । रोहितः ॥ २६ ॥

समाप्त